


SAPTHAGIRI (SANSKRIT)
ILLUSTRATED MONTHLY
Volume: 8, Issue: 9
December-2021, Price Rs.5/- Pages 24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

सचित्रमासपत्रिका
डिसेम्बर् २०२१
रू.५/-

## तिरुचानूरु श्रीपद्मावतीदेव्याः ब्रह्मोत्सवाः

(३०-११-२०२१ तः ०८-१२-२०२१ पर्यन्तम्)



## गीतामृतम्

अर्जुन उवाच -

निमित्तानि च पश्यामि विपरीतानि केशव।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे।।
(भगवद्गीता ३०/१)

श्रीकृष्णं प्रति अर्जुनः वदति ''हे केशव! अहम् अनर्थसूचकानि शकुनानि पश्यामि। अपि च युद्धे स्वकीयान् जनान् हत्वा तदनु श्रेयः शुभं न पश्यामि'' इति।



# सङ्कीर्तनम्

अञ्जलिरञ्जलिरयं ते
किं जनयसि मे खेदं वचनैः ।।अञ्जलि।।

मां किं भजसे मया किं ते
त्वं को वा मे तव काहं
किं कार्यमितो रोहं मम ते
शङ्कां विना किं समागतोसि ।।अञ्जलि।।

ननु विनयोक्तेर्न योग्याहं
पुनः पुनस्त्वं पूज्योऽसि
दिनदिनकलहनिधिना ते किं
मनसिजजनक रमामरण ।।अञ्जलि।।

दैवं बलवत्तरं भुवने
नैव रोचते सम्यक् मया
एवमेव भवदिष्टं कुरु कुरु
श्री वेङ्कटाद्रिश्रीनिवास ।।अञ्जलि।।



(अन्नमाचार्यसङ्कीर्तनम्)

# श्रितकल्पवल्ली विजयताम्

अखिलाण्डकोटिब्रह्माण्डनायकः, सप्तगिरीशः, वेङ्कटरमणः, सङ्कटहरणः, आपद्बान्धवः, श्रीवेङ्कटेश्वरः इत्याद्यनेकनामभिः भक्तैः स्तुत्यस्य श्रीवेङ्कटाचलपतेः दिव्यहृदयस्थले अनवरतमनपायिनी सती श्रीमहालक्ष्मीः देदीप्यमाना विलसति। तस्याः ज्ञानशक्तिमहिमानां मितिं वक्तुं, तत् ज्ञातुं वा यः कोऽपि न शक्नोति। तथापि भक्तानां योग्यतानुरूपं सा स्वमहिमाः प्रदर्शयति, धर्म-अर्थ-काम-मोक्षान् चतुर्विधपुरुषार्थान् तेभ्यः प्रयच्छति च।

एवं श्रीवेङ्कटेशमानसोल्लसिनी श्रीपद्मावतीदेवी स्वभक्तेभ्यः अत्युत्तम-अनन्त-महदैश्वर्यादिदात्री सत्यपि निरतं तनु-मनः-शरीरैः श्रीवेङ्कटेश्वरम् अनुसरन्ती श्रीस्वामिनः वशवर्तिनी सती सदा भासते। अत एव तिरुमलेशः ''श्रीनिवास'' इति प्रसिद्धिमाप्य वक्षस्थलस्थलक्ष्मीसहकारेण अखिलभक्तेभ्यः अनन्तेष्टार्थकल्याणपरम्पराः प्रवर्ष्य तद्वारा इहपरसुखानि अनुगृहणाति।

एवंरीत्या श्रीवेङ्कटाचलं परितः विलसत्सु दिव्यस्थलेषु सम्पदभिमानिनी स्थित्वा दयया भक्तान् रक्षति। सा एव महाराष्ट्रस्थ-कोल्हापुर्यां 'श्रीमहालक्ष्मीः' इति, नारायणवने 'पद्मावती' इति, तिरुचानूरुक्षेत्रे अर्चामूर्तिरूपेण 'श्री अलमेलुमङ्गा' अथवा 'श्रीपद्मावती' इति, तिरुमलक्षेत्रे श्रीश्रीनिवासहृदयपद्मे 'व्यूहलक्ष्मीः' 'भूतकारुण्यलक्ष्मीः' इत्यपि स्वसन्निधानं विधाय स्वदर्शनायागतेभ्यः अखिलेभ्यः च वरान् वर्षन्ती भक्तकल्पवल्ली सा इच्छाः पूरयति। सा जगन्माता विभिन्नस्थलेषु विविधनामभिः विराजते चेदपि श्रीमन्नारायणस्य महाराज्ञी एव।

तादृश्याः तिरुचानूरुस्थालमेलुमङ्गायाः ब्रह्मोत्सवाः एकान्ततया अङ्गरङ्गवैभवेन प्रचलन्ति। एषूत्सवेषु प्रत्यहं विविधवाहनारूढा सती शोभायमानरीत्या तिरुवीथिषु गत्वा भक्तानानन्दतुन्दिलान् कृत्वा स्वकरुणापूर्णवीक्षणेन अमितानन्दं कल्पयति। वाहनानां दर्शनेनानेकानि फलानि लभ्यन्ते श्रियः अनुग्रहेण।

तद्यथा - लघुशेषवाहनम् - योगशक्तिः, हंसवाहनम् - ज्ञानर्जनसिद्धिः, मौक्तिकमण्टपः - निर्मलता, पवित्रता; सिंहवाहनम् - अविच्छिन्नराजसम्, कल्पवृक्षवाहनम् - अभीष्टसिद्धिः, हनुमद्वाहनम् - बुद्धिः, बलम्, कीर्तिः, ऐश्वर्यम्; गजवाहनम् - सकलाभीष्टसिद्धिः, सूर्यप्रभवाहनम्, ज्ञानसिद्धिः; चन्द्रप्रभवाहनम्- करुणाकटाक्षसिद्धिः, रथोत्सवः - सकलमनोरथसिद्धिः, अश्ववाहनम्- सकलकार्यजयः, पञ्चमीतीर्थम् - सकलपापपरिहारः इत्यादयः।



तथाच वयं समेऽपि श्रीपद्मावत्याः ब्रह्मोत्सवेषु वाहनसेवादीन् विलोक्य देव्याः तत्पतेः श्रीशस्य च करुणावीक्षणसरणिमाप्य निर्गतदुःखाः, अघदूराश्च सर्वसत्सम्पदम् अवाप्य आनन्देम।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका

सम्पुटिः-०८ सञ्चिका-०९

## डिसेम्बर् २०२१

श्री प्लवनामसंवत्सरस्य कार्तिककृष्णद्वादशीतः
मार्गशिरकृष्णद्वादशीपर्यन्तम् - ११४१




मुखचित्रम् - गजवाहने श्री पद्मावतीदेवी, तिरुचानूरु
अन्तिमरक्षापुटः - श्री आण्डाळ्


गौरवसम्पादकः-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.





**सङ्केतः**
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



# अन्नमाचार्यसङ्कीर्तनवैभवम्

- डा.समुद्राल लक्ष्मणय्य

चरवाणी - ७९९३६६९२१६

### भगवद्गीतार्थकीर्तनम्

श्रीशङ्करभगवत्पादाः गीताभाष्यप्रारम्भे "तदिदं गीताशास्त्रं समस्तवेदार्थसारसङ्ग्रहभूतम् इत्यवोचन्। ततश्च वेदोक्तकर्मभक्त्यादियोगाः सङ्ग्रहेण गीतायाम् अपि प्रतिपादिताः सन्ति। वेदार्थोपबृंहणार्थं सङ्कीर्तनानि उद्दिष्टानि चेत्, तत्र गीतातत्त्वस्य निरूपणमप्यावश्यकमिति मत्वा अन्नमाचार्यः कतिपयगीताश्लोकानामनुवादरूपेणापि सङ्कीर्तनानि जगौ। तद्यथा -

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही।।
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापः न शोषयति मारुतः।।
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।
नित्यः सर्वगतस्स्थाणुरचलोऽयं सनातनः।।
अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि।।(भ.गी.२.२२.२५)

इति द्वितीयाध्याये आत्मनः स्वरूपं प्रत्यपादि। अन्नमार्य एतदनुवादरूपेण -

देहि नित्युडु देहमुलनित्यालु-
ईहल नामनसा यिदि मरवकुमी
गुदि बातचीर मानि कोत्तचीर कट्टिनट्टु-
मुदिमेनु मानि देहि मोगि कोत्तमेनु मोचु
अदन जंपगलेवु आयुधमुलितनि-
गदिसि यग्नियु नीरु गालियु जंपगलेवु
ईतडु नरकुवडो डीतडग्नि गालडु-
इतडु नीटमुनुगडीतडु कालि बोडु
चेतनुडै सर्वगतुंडौ चेलियिंचडेमिटनु-
ईतल ननादि ईत डिरवु गदलडु
चेरि कानरानिवाडु चिंतिंचरानिवाडु-
भरपु विकाराल बासिनवाडीयात्म
आरय श्रीवेङ्कटेशु नाधीनमीतडनि-
सारमु देलियुटे सत्यं ज्ञानमु।। (२-४२९)

इत्यादिवचनैः गीताश्लोकार्थं निरूपयामास।

अनि यानतिच्चे कृष्णुडर्जुनुनितो" (२-४३८)

इति सङ्कीर्तने अर्जुनं प्रति कृष्णः एवमुवाचेति कण्ठोक्त्या गीताम् अन्नमार्यः स्मरति स्म। एवमितरत्रापि गीतासन्देशदायीनि सङ्कीर्तनानि दृश्यन्ते।

न केवलं गीतावचनानि, किन्तु पुराणोक्तविषया अपि अन्नमार्यवाङ्मये विस्तरेण श्रूयन्ते। भागवते -

तस्यमाद्वैरानुबन्धेन निर्वैरेण भयेन वा।
स्नेहात्कामेन वा युञ्ज्यात् कथञ्चिन्नेक्षते पृथक्।।
गोप्यः कामात् भयात्कंसः द्वेषाच्चैद्यादयो नृपाः।
सम्बन्धाद्वृष्णयः स्नेहात् यूयं भक्त्या वयं विभो।।
(७-२-३०)

इति भक्तिवैविध्यं प्रतिपादितम्। तदेव अन्नमाचार्येण -

इंदरु नीकोक्कसरि येक्कुव तक्कुव लेदु-
चेंदि नी सुद्दुलु येमि चित्रमो कानि।
नी नाम मुच्चरिंचि नेरवेरे नोक्क मौनि-
नी नाममु विनक नेरवेरे नोकडु।
पूनि निन्नु नुतियिंचि भोगि याये नोकडु-
मोनमुन निन्नु दिट्टि मोक्षमंदे नोकडु।।।(४-८)

इति सङ्कीर्तने भक्तेः अनुकूलः प्रतिकूलश्चेति द्वावपि मार्गौ सचमत्कारं निर्दिष्टौ।

### आलङ्कारिकशैली

सेविंतुरा यितनि जेलगि परुलिट्लने-
काविंचे मम्मुनेक्कडि दैवमितडु।
पाल चवि यितडेरुगु पालबवलिंचे गो-
पालुगडनि नेमितनि भजियिंचगा,
पालुपडि तल्लिचनुबालु सहितंबु ने-
कालमुनु बापे नेक्कडि दैवमितडु।। (२-२९३)

इति सङ्कीर्तने व्याजस्तुत्यलङ्कारं प्रयुज्य भगवतः मोक्षप्रदत्वं वक्रोक्त्या सचमत्कारं निरूपितमस्ति।

**संस्कृतश्लोकानुवादः**

कदाचित् संस्कृतश्लोकानां वाङ्मये यत्र कुत्रापि स्थितानां आध्यात्मिकतत्त्वप्रतिपादकानां अनुवादोऽपि सङ्कीर्तनेषु पठ्यते। तद्यथा -

न मोक्षो नभसः पृष्ठे न पाताले न भूतले।
मोक्षो हि चेतो विमलं सम्यग्ज्ञानप्रबोधितम्।।
(योगवासिष्ठम् II - p. 1848)

इति योगवासिष्ठे श्लोकः। तदनुवादस्तु-

आकसान लेदु मोक्षमटु पातालमुन ले-
दीकड भूलोकमंदु येंदू लेदु,
पैकोनि आसलेल्ल पारदोलि वेदकिते-
श्रीकांतु बोगडेटि चित्तमुलो नुन्नदि।। (अन्न.सं.२४-६०)

इति दृश्यते। एवमेव -

समुद्रे शान्तकल्लोले स्नातुमिच्छति मूढधीः।
तथैव शान्ते संसारे ज्ञानमिच्छति दुर्मतिः।।

इति श्लोकः प्रसिद्धः। सोऽपि

कडलुडिपि नीराडगादलचु वारलकु-
कडलेनि मनसुनकु कडम येक्कडिदि(२-२२६) इत्यनूक्तः।
बूरुगुमाकुनु जेंदिन कीरमु चंदमुन-
आरय निष्फलमगु मरि यन्युल चेरिननु।। (२-२२४)

इत्यत्र स्थितो भावः **'विशालं शाल्मल्या नयनसुभगम्'** (भल्लट - २०७) इति भल्लटविरचितश्लोकेऽपि संलक्ष्यते। ततश्च अन्नमार्यः संस्कृतवाङ्मयगतान् आध्यात्मिकतत्त्वगर्भितान् श्लोकान् सम्यक् परिशील्य स्वसङ्कीर्तनेषु तद्भावान् निबबन्धेति सहृदयसम्मोदजनकोऽयं विषयः।

**शरणागतिः**

गीतायाः चरमश्लोके -

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज (१८-६६) इति शरणागतिः प्रतिपादिता।

**श्वेताश्वतरोपनिषदि -**

''मुमुक्षुर्वै शरणमहं प्रपद्ये'' इति शरणागतिर्निर्दिष्टा। शरणागतिरेव प्रपत्तिः, भरन्यासः, भरसमर्पणम् इत्यादिभिः शब्दैः व्यवह्रियते।

आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्।
रक्षिष्यतीति विश्वासः गोप्तृत्ववरणं तथा।
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः।।

इति प्रपत्तेः स्वरूपं न्यरूपि।

भक्तिमार्गस्यापि किञ्चिदिव क्लेशावहत्वं संलक्ष्य सर्वजनसुलभोपायतया प्रपत्तिः उपात्ता। अन्नमार्योऽपि -

ओक्कडे मोक्षकर्त ओक्कटे शरणागति-
दिक्कनि हरिगोल्चि बतिकिरि तोंटिवारु(२-१८६)

इति इतरोपायापेक्षया शरणागतेः सौलभ्यं प्रामुख्यं च निर्दिदेश।

''तथा कुरुष्व मुदा मामद्यैव-
अधोक्षज! ते अनुदासोऽहम्'' इति सङ्कीर्तने
व्रजामि शरणं वरद तवाहं -
त्यजितानुबन्धधर्मं मम
भुज (द्वय) कृतां पुरा प्रतिज्ञां-
वृजिनैर्मोक्षयिष्यामीति।।(४-४२४)

इति गीताचरमश्लोकभावं प्रकटयामास।

प्रपत्तौ भगवद्विश्वासः नितरां प्राधान्यं भजते। तदुक्तम् -

निन्नु नम्मि विश्वासमु नीपै निलुपुकोनि-
उन्नवाड निक वेरे उपायमेमिटिकि (२-२०२)

इति अन्नमार्यः विश्वासप्रामुख्यमुद्घोषितवान्।

रामायणे सुन्दरकाण्डे स्थितं कञ्चन वृत्तान्तमुदाहृत्य प्रपत्तौ विश्वासप्राधान्यम् एवम् अन्नमार्यः प्रकटीकृतवान्।

परगनिन्द्रजित्तुडु हनुमन्तुनि-
ब्रह्मास्त्रंबुन गट्टि
अरय नन्दुपै मोकुलु गट्टिन-
नल ब्रह्मास्त्रमु वदले,
परिपरिविधमुल निटुवलेने हरि-
प्रपत्ति नम्मिन नरुडु,
तिरुगंगर्ममार्गमुनकु जोच्चिन-
देवुडु दन वात्सल्यमु वदलु।। (२-२२) इति

अशोकवनिकायां इन्द्रजित् हनुमन्तं प्रति ब्रह्मास्त्रं प्रयुयोज, तेन हनुमान् बद्धो बभूव। तदा दैत्याः शणवल्कलैः तं बबन्धुः। तदा ब्रह्मास्त्रं कोपाविष्टं समजनि। मयि एतेषां विश्वासो नास्तीति मत्वा तदस्त्रं हनुमन्तं तत्याज। हनुमान् बन्धमुक्तो बभूव। एवमेव प्रपन्नानां भगवति सुदृढः विश्वासः नास्ति चेत् भगवानपि भक्तवात्सल्यं परित्यजतीति।

एवं रमणीयया पद्धत्या अन्नमाचार्यः शरणागतिप्रामुख्यं निर्दिदेश। अन्यत्र

समबुद्धे यिन्दरिकि सर्ववेदसारमु-
समुडिंदरिकि हरि साधनमो यय्या।।(२-४०९)

इति सङ्कीर्तने **समबुद्धिरेव सकलवेदसारांश** इति पदकवितापितामहः उद्घोषितवान्। गीतादिषु ग्रन्थेष्वपि - **विद्याविनयसम्पन्ने** (भ.गी.६.२८) इत्यादिषु सन्दर्भेषु समदृष्टेः प्रामुख्यं बहुधा निरूपितमस्ति।

एवं सकलवेदार्थनिरूपणार्थं पञ्चदशशताब्द्यां समुत्पन्नं अन्नमाचार्यस्य सङ्कीर्तनवाङ्मयं अधुना जगति विस्तृतं प्रचारं लभते इत्येतत् मुदावहम्।





# भक्ताङ्घ्रिरेणुः विप्रनारायणः

- डा.एस्.एन्.सम्पत्तकुमारः
चरवाणी - ९९००७८१३५६

भगवतः श्रीमन्नारायणस्य अर्चावतारमहिमाप्रदर्शकाः अनेके दिव्यदेशाः द्रविडभूभागे विराजन्ते। बहवः राजानः द्राविडदेशशासनम् अकुर्वन्। तेषु चोळराजानः विख्याताः। तच्छासितेषु प्रदेशेषु ''पूतङ्गुडि'' नामकः भगवत्करुणाद्योतकः दिव्यदेशः भासते। तत्समीपे एव 'मन्नङ्गुडि' नामकं नगरम्। भगवन्नारायणस्यादेशानुसारेण वनमालांशभूताः दिव्यसूरयः 'तिरुमण्डङ्गुडि' नगरे अवतीर्णाः। कलियुगस्यारम्भः समभवत्। कलौ अष्टाविंशतिवर्षाण्येव अतीतानि। तस्मिन् काले श्रीरङ्गनाथस्य अन्तरङ्गभक्ताः आत्मगुणसम्पन्नाः एते वनमालांशत्वेन प्रादुर्भूताः। एकाशीत्युत्तरद्विशततमे कलियुगे प्रभवनामसंवत्सरे इन्दुवासरे कृष्णपक्षचतुर्थ्यां वनमालांशः दिव्यसूरिः अवततार। एतेषां अवतारकालः आधुनिकविमर्शकदृष्ट्या सप्ताशीत्युत्तरसप्तशततमः। श्रीवैष्णवानां कुले जनिमलभन्त।

दिव्यसूरेः भक्तङ्घ्रिरेणोः मातापितरौ अतीवसत्त्वसम्पन्नौ अभवताम्। जातस्य पुत्रस्य विप्रनारायण इति नाम अकुरुताम्। भगवत्कृपापात्रः एषः बाल्यादेव वेदशास्त्रेषु श्रद्धारुचिसम्पन्नः अभवत्। तेषु कृतभूरिपरिश्रमाः श्रीरङ्गम् इति प्रख्यातभूलोकवैकुण्ठं प्रत्यागताः। प्राकृतविषयेषु अनासक्तः विप्रनारायणः नैष्ठिकब्रह्मचर्यव्रतधारी अजायत। श्रीरङ्गनाथस्य बहुविधकैङ्कर्यकरणे अस्याशा बलवती प्रत्यहमवर्धत। भगवतः आराधनाय तुलसी, पुष्पाणि आवश्यकानि आसन्। तच्चयनार्थं नन्दनवमेकं निर्माय पुष्पाणि तुलसीदलानि च एकस्मिन् सूत्रे आबध्य मालारूपापन्नां पुष्पमालां तुलसीमालां च श्रीरङ्गनाथाय अर्पयन् स्वायूंषि आनन्देन एषः विप्रनारायणः यापयन्नासीत्। एतस्मिन्नेव काले कावेर्याः उत्तरे तटे 'तिरुक्कुरुङ्गूर' नामकः दिव्यदेशः आसीत्। तत्र देवकन्यकायाः अंशभूता काचन कन्यका देवदेवी नाम्ना प्रख्याता चोळभूपतेः नाट्यसेवाकारिणी आसीत्। एकदा सा स्वभगिन्या सह विप्रनारायणवर्धितं नन्दनवनं प्रति आगतवती। नन्दनवनलावण्येन आकृष्टा सा सस्यानां पालने वर्धने च मग्नं विप्रनारायणनामानं युवानम् अपश्यत्। तेन आकृष्टा सा तत्समीपं गतवती। विप्रनारायणस्तु तामचिन्तयन् स्वकार्यमग्नः एवाभवत्। स्वसमीपागमनेनापि अस्खलितम् एतं दृष्ट्वा चकिता देवदेवी षण्डो वा? उन्मत्तो वा? इति चिन्तामग्ना अभवत्। तदानीं तस्याः भगिनी भगवत्सेवायाः अतुलं महिमानं देवदेव्यै अवर्णयत्। तदसहमाना देवदेवी महता प्रयत्नेनापि विप्रनारायणमाकृष्य तस्य ब्रह्मचर्यव्रतभङ्गे कृतसङ्कल्पा बभूव।

वैराग्यसम्पन्नं विप्रनारायणं मन्मथवशीकरणाय कृतप्रतिज्ञा देवदेवी तत्समीपमुपगम्य नन्दनवनकार्येषु स्वकैङ्कर्यमयाचत। दासीकुले उत्पन्नत्वेन स्वात्मानं तस्मै परिचाययामास। वेषान्तरपरिगृहीता देवदेवी अनाथं स्वात्मानम् उद्धरणाय विप्रनारायणम् अभ्यर्थयामास। विप्रनारायणस्तु स्वभावतः सात्त्विकः दयालुश्च। तस्याः वचनश्रवणमात्रेण आर्द्रः सः स्वेन साकं नन्दनवनकार्येषु तस्याः उपस्थितिम् अभ्युपगच्छत्। अथ गच्छत्सु दिनेषु एकदा वर्षाकालः आगतः। श्रीरङ्गे अतीव वृष्टिः अजायत। तोयेनाप्लुता सा विप्रनारायणस्य कुटीरं प्रत्यागतवती। जलाप्लुतां तां दृष्ट्वा करुणावेष्टितः विप्रनारायणः स्वोत्तरीयं तस्यै अदात्। उत्तरीयं ऊढ्वा सा कार्तज्ञ्यप्रकटनाय तं शिरसा प्रणम्य झडिति तमालिङ्गयामास। विप्रनारायणस्य दिग्भ्रमः सञ्जातः। मन्मथाविष्टः सः अभवत्। विषयसन्निधाने चित्तस्य स्थिरता कथं साधयितुं शक्यते ''विद्वांसमपि कर्षति विषयास्वादः''। दूरे अपगताः भगवतः सेवादयः। मोहाविष्टः विप्रनारायणः देवदेव्याः सेवानिरतः अभवत्। गच्छता कालेन तां विहाय अवस्थातुमपि सः नार्हः अभवत्। एतादृशावस्थायाः प्रापणायैव देवदेवी तदुटजे एतावत्कालम् उषितवती। ब्रह्मचर्यव्रतात् भग्नं तं दृष्ट्वा स्वप्रतिज्ञापूरणेन दृष्टा देवदेवी स्वपुरं प्रति गन्तुमुद्युक्ता। विप्रनारायणं प्रति किमप्यनुक्त्वैव सा गतवती। तामपश्यन् विरहातुरः विप्रनारायणः तस्याः नगरं प्रत्येव अगच्छत्। तस्यागमनम् असहमाना देवदेवी गृहद्वारं पिधाय अन्तर्गता। तस्याः दर्शनालाभेन दुःखितः विप्रनारायणः तस्याः गृहद्वारि एव वस्तुमुपाक्रमत।



एतस्मिन्नेव काले लोकनिरीक्षणाय गगनमार्गेण श्रीरङ्गनायकी श्रीरङ्गनाथश्च आगच्छताम्। तौ विप्रनारायणस्य स्वकैङ्कर्यरतस्य दीनां स्थितिमवलोक्य दुःखितौ अभवताम्। येन केनापि प्रकारेण परिवर्तयितुं मनः अकुरुताम्। पुष्पमालातुलसीमालाकैङ्कर्ये यथा विप्रनारायणः यथापूर्वमिव निरतः भवेत् तथाकरणे कृतसङ्कल्पौ अभवताम्। पुत्रस्य ईदृशीं मोहरूपामवस्थां दृष्ट्वा खिन्ना श्रीरङ्गनायकी तदुद्धरणाय श्रीरङ्गनाथम् अप्रार्थयत्। स्वभावतः दयार्द्रः भगवान् तामाश्वास्य मानवरूपम् अधारयत्। मानवरूपी श्रीरङ्गनाथः देवदेव्याः गृहमागत्य सुवर्णपात्रमेकं प्रायच्छत्। तया प्रश्ने कृते ''विप्रनारायणेन दत्तमेतत्'' इत्युक्त्वा निर्जगाम। वस्तुतः तत् भगवदाराधनपात्रेषु अन्यतममासीत्। सुवर्णेनाकृष्टा सा देवदेवी तत् स्वीकृत्य आनन्दनिर्भरा अभवत्। श्रीरङ्गनाथदेवालये सुवर्णपात्रादर्शनात् महान् कोलाहलः सञ्जातः। तत्पात्रान्वेषणाय राजभटाः निर्गताः। पात्रादर्शनेन चोलभूपतिरपि किङ्कर्तव्यताविमूढः अभवत्। देवदेवी तु

अपूर्वपात्रलाभेन सन्तुष्टा तद्विक्रेतुं स्वदासीं प्रेषितवती। इतस्ततः परिभ्रमणरतां तां विलोक्य राजभटाः शङ्कान्विताः अभवन्। दासीं प्रति अपृच्छन् सुवर्णपात्रविषये। दासीवचनमनुसृत्य ते देवदेवीं शृङ्खलैः प्रबध्य राज्ञः पुरस्तात् उपस्थापयामासुः। सा तु विप्रनारायण एव प्रेषकः इति आदितः यथाकृतमकथयत्। विप्रनारायण आहूतः पृष्टश्च। विषयानभिज्ञः सः किमपि प्रत्युत्तरयितुं नाशकत। राज्ञा आदिष्टः सः कारागृहे निबद्धः।

तस्मिन्नेव दिने रात्रौ राजा स्वप्नमेकम् अपश्यत्। श्रीरङ्गनाथ एव नररूपेणागत्य सुवर्णपात्रमपाहरत् इति च ज्ञातवान्। पात्रस्य पुनर्लाभेन सन्तुष्टः राजा विप्रनारायणं कारागृहात् अमोचयत्। विषयव्यामोहादेव ईदृशी स्थितिः सञ्जाता इति विप्रनारायणः अवगच्छत्। तस्य सम्यग् ज्ञानोदयः अभवत्। यथापूर्वं सः पुष्पकैङ्कर्ये नन्दनवनवर्धापने च निरतः बभूव। मायारूपः त्यक्तः, इदानीं तु भागवतसेवा एव प्रधानभूता इति अवगता। तस्मात् कारणात् पूर्वतनं नामधेयम् अत्यजत्। स्वनाम भक्ताङ्घ्रिरेणुरूपेण पर्यावर्तयत्। भक्तानां पादधूली इत्यन्वर्थकः शब्दः। देवदेवी अपि श्रद्धातपस्यादिकं भक्तङ्घ्रिरेणोः दृष्ट्वा परिवर्तितमना बभूव। स्ववशीभूतं धनं श्रीरङ्गनाथाय समर्प्य, भगवतः कैङ्कर्ये रता सञ्जाता। आजीवितम् एते सूरयः श्रीरङ्गक्षेत्रे एव अवसन् कैङ्कर्यमग्नाः। एतैः महद्भिः प्रबन्धद्वयं विरचितम्। आद्यः दिव्यप्रबन्धः ''तिरुमालै'' नामकः। अत्र पञ्चचत्वारिंशत् गाथाः सन्ति। श्रीशौनकमहर्षिविरचितस्य श्रीविष्णुधर्मस्य सारः प्रबन्धः एषः। भूलोकवैकुण्ठः श्रीरङ्गम् इति प्रसिद्धः नगरी। वैकुण्ठनिलये यावान् आनन्दः नित्यसूरिभिः अनुभूयते ततोऽतिशयितः आनन्दः भगवन्नामसङ्कीर्तनात् उपलभ्यत इति भक्ताङ्घ्रिरेणुः वर्णयति। एकादशतमगथापर्यन्तम् एतेषाम् अनुभवः एवं वर्तते, अत्रत्याः जनिमन्तः जनाः भगवत्स्वरूपगुणानुभवे विगतप्रयत्नाः संसरन्ति इति स्वदुःखं प्रकटयति। जीवान् भगवतः गुणान् उपदिशन् दिव्यसूरिः परभक्तिवृद्धिप्रकारान् विशदयति। स्वस्य दैन्यतां भगवतः दीनबन्धुताञ्च प्रपञ्चयति। भगवति अर्पणाय स्वस्मिन् किमपि नास्तीति आकिञ्चन्यं प्रतिपादयति। प्राप्यस्य ब्रह्मणः, प्रापकस्य स्वस्य च सम्बन्धविशेषान् निरूप्य भगवतः कृपामहिमानं स्तौति।

पुनः संसारे जन्म मास्तु। आत्मज्ञानादेव प्रकृतिमोहात् मोक्षः। इन्द्रियनिग्रहस्तु भगवतः कृपासाध्यः। भगवतः प्राप्तये स एव उपायभूतः। गजेन्द्रम् इव आर्तान् झडिति आगत्य संरक्षति। अतः श्रीमन्नारायणस्य कृपाकटाक्ष एव प्रार्थनीय इति प्रथमप्रबन्धे न्यरूपि। ''तिरुप्पळ्ळि एळुच्चि'' नामकः प्रबन्धः उपनिषत्सारभूतः दशगाथात्मकः। ''उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत'' इति श्रुतिवाणी। परन्तु भगवतः एव निद्रातः प्रनोधनाय गायति एषः। निद्रा नामात्र योगनिद्रा। यथा वा विश्वामित्रः श्रीरामचन्द्रं ''कौसल्यासुप्रजा राम'' इति प्रबोधयत् तथा एते श्रीरङ्गनाथं प्रबोधयन्ति। कुतः रक्षणार्थं, रक्षणं तु दयाकार्यम्। दयया विना किमपि न सिद्ध्यति। जीवाः तु भगवता रक्ष्याः। उत्थाय दयां कुरु सर्वेभ्यः इति प्रार्थयन्ति। राजवत् अर्हणीयं रङ्गेशयं परवासुदेवं मत्वा प्राबोधिकीं सूक्तिमालां एते अरचयन्।

**कावेरी विरजा सेयं वैकुण्ठं रङ्गमन्दिरम्।**
**स वासुदेवो रङ्गेशः प्रत्यक्षं परमं पदम्।।**

इति महिमा वर्ण्यते। ''राजाधिराजस्सर्वेषां'' तादृशाय प्रबोधनात्मिकां स्तुतिं य व्यावरोहत तस्मै नमः इति कीर्त्यते। श्राव्यरूपः प्रबन्धः महात्मभिरेतैः विरचितः। तेन उत्थितः श्रीरङ्गनाथः कटाक्षवीक्षणेन अस्मान् आनन्दयति। इत्थं वनमालायाः अंशत्वेन अवतीर्णाः प्रथमतः मायावशमापन्नाः ततो मुक्ताः। मायाविमोचनप्रकारश्च द्वाभ्यां श्राव्यप्रबन्धाभ्यां लोकेभ्यः उपादिशन्। श्रीरङ्गे एव आमरणं उषित्वा अन्ते दिव्यं धाम ययुः।।

# तिरुमलतिरुपतिदेवस्थानानि







सर्वोपनिषदो गावः दोग्धा गोपालनन्दनः।
पार्थो वत्सः सुधीः भोक्ता दुग्धं गीतामृतं महत्।।

३०-११-२०२१ दिने गोमहासम्मेलनसमारोहे ज्योतिप्रज्वालकाः
ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा।।के.एस्.जवहर् रेड्डि ऐ.ए.एस्. महाशयाः।
तत्र च ति.ति.दे.पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि तथा इतराधिकारिणश्च।

# तिरुमलतिरुपतिदेवस्थानानि





गोग्राससमर्पणे कञ्चि कामकोटिमठस्य पीठाधिपतयः
जगद्गुरु श्री श्री श्री शङ्करविजयीन्द्रसरस्वती स्वामिनः।



३१-११-२०२१ दिने गोमहासम्मेलने प्रवाचकाः ति.ति.दे. पालमण्डलध्याक्षाः
श्री वै.वि.सुब्बारेड्डि महाभागाः। तत्र च पीठापितयः, मठाधिपतयश्च
अनेके भागं स्वीचक्रुः।

# तिरुमलतिरुपतिदेवस्थानानि





गोमहासम्मेलने विक्रयशालासु कदलीफलपरिशीलने ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि तथा ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा।। के.यस्. जवहर् रेड्डि ऐ.ए.एस्. महाभागाः।



३१-११-२०२१ दिने गोमहासम्मेलने सन्देशसमर्पकाः विविधपीठाधिपतयः मठाधिपतयश्च।

# तिरुमलतिरुपतिदेवस्थानानि





गोसम्मेलनसमारम्भे निर्मितानां गवाधारितपदार्थविक्रयशालानां परिशीलने ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि तथा ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा।। के.यस्. जवहर् रेड्डि ऐ.ए.एस्. महाभागाः।





निवृत्तेभ्यः ऐ.ए.एस्. आधिकारिभ्यः श्री विजयकुमार् महोदयेभ्यः गोसम्बद्धपदार्थदातारः तिरुपति संयुक्तकार्यनिर्वहणाधिकारिणः श्री वि.वीरब्रह्मम् ऐ.ए.एस्. महोदयाः



पञ्चगव्यादिपरिशीलने ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि तथा ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा।।के.यस्. जवहर् रेड्डि ऐ.ए.एस्. महाभागाः।



# गोविन्दसाक्षिकं गोसम्मेलनम्

- श्री वि. प्रदीपकुमारः
चरवाणी - ९४९१६४६५३२

गोरक्षणमेव धर्मरक्षणमिति निनादेन तिरुमलतिरुपतिदेवस्थानानाम् आध्वर्ये अक्टोबर् ३०,३१ दिनयोः महति कलाक्षेत्रे अयं गोसम्मेलनकार्यक्रमः 'न भूतो न भविष्यति' इति रीत्या अतिवैभवेन प्राचरत्। 'युग तुलसी' संस्था तथा श्री गोधां पत् मेड, राजस्थानम् अनयोः सौजन्येन अनेकदेशेभ्यः आगतानां जगद्गुर्वादीनां समक्षं आचरितमिदं गोसंरक्षणकर्तव्यतायाः नूतनपद्धतिबोधकमिवासीत्।

आद्यदिने सेव् संस्थायाः कार्यनिर्वहणाधिकरिणः, गवाधारितकृषिमहर्षिणः श्री विजयरामस्य नेतृत्वे सहस्राधिककृषकैः गवाधारितव्यवसायस्य विषये बोधनकार्यक्रमः सञ्चालितः। ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि महोदयस्य अमृतहस्तात् प्रारब्धेऽस्मिन् कार्यक्रमे उभयतेलुगुराष्ट्रियाः गवाधारितव्यवसाये औत्साहिकाः कृषकाः, निपुणाश्च स्वीयान् अनुभवादीन् व्यक्तीचक्रुः। आदौ कलाक्षेत्रस्य प्राङ्गणे निर्मितान् दशोत्तरसङ्ख्याकानि गवाधारितोत्पन्नपदार्थप्रदर्शनमन्दिराणि ति.ति.दे. पालकण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि महोदयाः आरब्धवन्तः। सम्पूर्णसाम्प्रदायपद्धत्यां, गवाधारितेन विधानेन उत्पन्नान्, गवाधारितपञ्चगव्यादीनपि प्रदर्शनशालासु स्थापितवन्तः। आरम्भे समावेशमुद्दिश्य अध्यक्षोपन्यासकाः ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि महोदयाः गवाधारितव्यसायस्य प्रामुख्यं कल्पयति ति.ति.दे. इति, 'गुडिको गोमात' (मन्दिरस्यैका गोमाता) 'गवाधारितनैवेद्यम्' 'नवनीतसेवा' इत्यादिनूतनकार्यक्रमेभ्यः गोरक्षणे कटिबद्धम् अस्ति ति.ति.दे. इत्यप्युक्तवन्तः। गवाधारितकृषिणा उत्पन्नानेव नैवेद्यत्वेन उपयुञ्महे इति, तादृशश्रेष्ठान् पदार्थान् विक्रयशालापक्षतः अपि अधिकधनेन क्रीणीमः इत्यपि कृषकानां हर्षध्वनीनां मध्ये प्रकटीकृतवन्तः च। ति.ति.दे. कार्यनिर्वहणाधिकारिणः श्री डा।।के.यस्.जवहर् रेड्डि महोदयाः अपि गोरक्षणे ति.ति.दे. पक्षतः स्वीकृतकार्याणि कानीति उक्तवन्तः।

मुख्यातिथिरूपेणागता माता निर्मालानन्दा योगभारती जी गोरक्षणस्य आवश्यकतां, अन्नदानस्य औचित्यं च विवृणोत्। उभयराष्ट्रियान्नदातारः अनेके गवाधारित व्यवसायविषये स्वीयानुभवान् उक्तवन्तः। सेव् संस्थायाः अधिकारिणा विजयरामेण साकं अनेके लब्धप्रतिष्ठाः, कृषिनिपुणाः, शास्त्रवेत्तारः गवाधारित व्यवसायविधानानि कृषिकान् सोदाहरणं अब्रुवन्।

कञ्चि कामकोटिमठस्य पीटाधिपतयः जगद्गुरु श्री श्री श्री शङ्करविजयेन्द्रसरस्वती स्वामिनः मुख्यातिथिरूपेण अतिरथ-महारथादीनां सकाशे गोमहासम्मेलनस्य द्वितीयदिवसस्य समापनसमावेशः अक्टोबर् ३१ दिनाङ्के सायाह्ने नयनरञ्जकत्वेन प्रारब्धः। ति.ति.दे.







पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि महोदयाः स्वप्रवचने तेलुगुराष्ट्रियगोशालाः श्री वेङ्कटेश्वर गोसंरक्षणशालया अनुसन्धानं कृत्वा गोपोषणाय आर्थिकसहायं कुर्मः इति सभिकानां पुरस्तात् करतालध्वनिषु प्रकटितवन्तः। ति.ति.दे. तः गोमहासम्मेलनं आरब्धमिदं प्रत्येकस्मिन् जनपदे अपि एतादृशानेककार्यक्रमैः साकं आचरिष्यते इत्यवोचन्। ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा।। के.यस्.जवहर् रेड्डि महोदयाः तेलुगुराष्ट्रयोः ६०० तः अधिकगोशालानाम् अभिवृद्धिदृष्ट्या कार्यचरणं क्रियते इत्युक्तवन्तः।

गवाधारितकृषिरेव प्रपञ्चाय समुचिता इति निश्चित्य ऐक्यराज्यसमितये निवेदनीयमिति तिरुपति शासकः श्री भूमन करुणाकर रेड्डि सूचितवन्तः।

प्राकृतिकव्यवसायेन प्रपञ्चाहारसमस्याः परिष्कर्तुं शक्यन्ते इति निवृत्ताः ऐ.ए.एस्. अधिकारिणः श्री विजय कुमार् उक्तवन्तः। गोमातुः वैशिष्ट्यं विज्ञापयन् जोन्नवित्तुल रामलिङ्गेश्वरराव् महोदयैः रचितं गोमातृगीतं ति.ति.दे. चैर्मन् तथा इ.वो. आविष्कृतवन्तः। युगतुलसीसंस्थायाः पालकमण्डल्यध्यक्षाः, ति.ति.दे. पालकमण्डलिसभ्याश्च श्री के.शिवकुमार् गोरक्षकस्य गोविन्दस्य सरण्यामेव ति.ति.दे. गोवैशिष्ट्यं विश्वव्याप्तं कर्तुं सन्नद्धमिति अभिनन्दनानि समार्पयन्। 'गुडिको गोमाता' इत्यादिविशिष्टकार्यक्रमान् कुर्वदेव गैः 'जातीय प्राणिः'' इति प्रकटनीया इति निश्चयमपि ति.ति.दे. अकरोत् इति विज्ञापितवन्तः। विशिष्टरीत्या समावेशं निरवहदिति कार्तज्ञ्यमपि सूचितवन्तः तथा गां जातीयप्राणिरूपेण प्रकटीकर्तव्यमिति केन्द्रं विज्ञापयन्तः सङ्क्रान्त्यनन्तरं देशव्याप्तगोमहारथयात्रायाः प्रारम्भो भविष्यतीत्यपि संसूचयामासुः श्री शिवकुमार् महाभागाः। ति.ति.दे. पालमण्डल्या प्रतिपादितविधया गां जातीयप्राणिः इति प्राकटयितुं प्रमुखाः योगगुरवः, पतञ्जलियोगपीठस्य व्यवस्थापकाः श्री बाबा रामदेव महाशयाः केन्द्रं विज्ञापयामासुः। देशे मुख्यमन्त्रिणः समेऽपि ति.ति.दे. प्रतिपादनसमर्थनाय नियमावलिनिर्माणे सहकर्तारः भवेयुः इति ऊचुः। भुवनेश्वरीपीठस्याधिपतयः श्री कमलानन्दभारती स्वमिपादाः, उडुपि पेजावर अधोक्षजमठाधिपतयः श्री विश्वप्रसनतीर्थमहास्वामिनः, उत्तराखण्ड श्री गोपाल् मणि महाराज्, ओडिशा श्री परमहंसप्रज्ञानन्दमहाराज्, राजस्थानम् श्री राधाकृष्णजी महाराज्, श्री गोधां महातीर्थ पत् मेड, राजस्थानम् गौ ऋषि श्री दत् शरणानन्द महाराज् पादाश्च स्वीयं गोसन्देशम् आलापितवन्तः।

अवधूतदत्तपीठस्य उत्तराधिकारिणः पूज्यश्री दत्त विजयानन्दतीर्थाः, कर्णाटक यादगिरि श्री यतिराज नारायण रामानुज जीयर् स्वामिनः, जगद्गुरु शङ्कराचार्यमठः श्री श्री श्री राघवेश्वर भारती महास्वामिनः, एर्पेडु व्यासाश्रमः श्री परिपूर्णानन्दगिरि स्वामिनः स्वानुग्रहभाषणं चक्रुः। गोरक्षणे ति.ति.दे पक्षतः प्रारब्धोद्यमः विश्वव्याप्तः भवेदिति मुख्यातिथयः ऐच्छन्। गोसंरक्षणनिर्णयः देशसंक्षेमार्थं भवतीत्यपि उक्तवन्तः। शृङ्गेरी शारदापीठाधिपतयः श्रीविधुशेखरभारती स्वामिनः चलच्चित्रमाध्यमेन सन्देशं दत्तवन्तः। कार्यक्रमारम्भे जगद्गुरु श्री श्री श्री शङ्करविजयीन्द्रस्वामिभिः प्रारब्धः गोधूलीकार्यक्रमः आहूतान् आनन्दितान् अकरोत्। कपिलगोः वत्सस्य च प्रत्येकपूजां कृतवन्तः स्वामिपादाः। कलक्षेत्रसमीपे सप्तगोजातीनां प्रदर्शनं द्रष्टृणां अनिर्वचनीयानन्दानुभतिं अकल्पयत्। उत्तर-दक्षिण भारतदेशीयसङ्गमरूपेणाचरितगोसम्मेलनमागतान् ति.ति.दे पक्षतः सवैभवं सत्कृतवन्तः ति.ति.दे. अधिकारिणः। एतादृशकार्यक्रमान् इतोप्यधिकतया कृत्वा साफल्यं प्राप्य, सकलदेवतास्वरूपां गां अत्यन्तं शीघ्रमेव जातीयप्राणित्वेन प्राप्नुम इति श्रीगोविन्दचरणारविन्दं प्रार्थयामः। जय गोमातः, जय गोविन्द!





यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च।



# हरिदासवाङ्मये श्रीवेङ्कटाचलाधीशः

(विजयदासकृतिषु)

तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु
संस्कृतानुवादः - डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८

भगवान् श्रीनिवासः सर्वोत्तमः सर्वेश्वरः सर्वव्यापकश्च। श्रीनिवासः सर्वत्र भवति चेत् तिरुमलक्षेत्रं प्रति आगमनस्य आवश्यकता नास्ति। तथापि आगमनस्य कारणं तावत् यत्र श्रीनिवासः भवति तत्र सर्वतीर्थानि, समस्तपुण्यक्षेत्राणि, सकलसात्त्विकभक्ताश्च भवन्ति। अतः एतेषां सर्वेषां दर्शनं भवतीति। विश्वे यत्किमपि वस्तु द्रष्टुं प्राप्तुं च शक्यते। परन्तु भगवतः भक्तानां दर्शनं तावत् दुर्लभम्। एवं प्रकारेण बहुधा आत्मनि भगवतः दर्शनकांक्षिणो भूत्वा आलोचयन्तः अन्ततो गत्वा ''रक्षणार्थं रमाकन्तः रमते प्राकृतो यथा'' इति पुराणवचनम् अनुसृत्य **ओलिदु भकुतरिगागि मदुवे हब्बिसि कोंड। सुलभ देवरदेव विजय विट्ठलराय** - कलियुगे भक्तेभ्यः अनुग्रहं प्रदातुं त्वं पद्मावतीपरिणयव्याजेन भूलोकं प्रति आगतवान्। हे स्वामिन्! अत एव दर्शनार्थम् अहम् आगतवान्। दर्शनभाग्यम् अनुगृह्णातु इति विजयदासवर्याः कथयन्ति।

विजयदासवर्याणां भक्तिविषये सन्तुष्टः भगवान् श्रीनिवासः विजयदासं महता वैभवेन आहूय दर्शनं च प्रदाय तोषितवान्। भगवतः श्रीनिवासस्य सूचनानुसारं विजयदासवर्यः ज्ञानिप्रियाय स्वामिने त्र्यशीतिपदानि विरचय्य समर्पितवान्। ग्रन्थविस्तारभीत्या तानि सर्वाणि पदानि व्याख्यातुं न शक्यते इति कृत्वा तेषु प्रधानानि कानिचन पदानि विवृणोमि(उदाहरामि)।

सुलादिदासाः इति प्रथितयशस्काः विजयदासवर्याः सुदीर्घैः चरणपङ्क्तिभिः सप्ततालैः सुलादीन् रचितवन्तः। तेषु वेङ्कटाद्रेः वर्णनशैली, श्रीवेङ्कटेश्वरस्य लीलावर्णनस्य रीतिः इत्यादयः पाठकानां मनःफलके दृश्यरूपेण अवश्यं स्थास्यन्ति। एते पुराणान्तर्गतं वेङ्कटेश्वरमाहात्म्यं कन्नडभाषायां सुलभया शैल्या अकथयन्।

**स्वामि पुष्करणिस्नान ई महात्मन दर्शन**
**ई महियोल गोम्मे ने मदल्लि माडिदवनु**
**योमा भूपाताल दोलगेनिस्सीमनागि चरिसि, निज कामितार्थव बेडदे। कामिसि हरिय पादपामरनागदे, नम्म विजय विठलन्न नामवनेउंडु निज धम दल्लि सेरवनु।।**

(अस्मिन् भूमण्डले जन्म लब्धवान् मानवः भक्त्या श्रद्धया च वेङ्कटाद्रिपर्वतं समागत्य अत्र विद्यमाने पुष्करिणितीर्थे स्नानं कृत्वा भगवतः दर्शनं करोति चेत् अलम्। तादृशः भक्तः स्वर्गमर्त्यपाताललोकेषु भ्रमित्वा यथेष्टं विषयान् प्राप्नोति। श्रीहरेः पादपद्मयोः समाश्रयणेन सुलभतया कैवल्यं प्राप्तुं शक्नोति।

**सुररु गंधर्वरु उरगयक्षसिद्ध।**
**गरुडकिंपुरुष किन्नर गुह्यकरु सा।**
**ध्यरु तुंबरादि निकरवलल्लि गल्लिगे।**
**वरतपसिगलागि गिरिय तप्पलल्ली**
**गरुडासन नम्म विजय विठलन्न**
**स्मरणे माडुत संचरिपुदु कंडे।।**

(विजयदासवर्याः यदा वेङ्कटाद्रिम् आगतवन्तः तदा तैः यद् दृष्टम् इत्थम् अभिवर्णयन्ति। देवताः गन्धर्वाः उरगाः यक्षाः सिद्धाः गरुडाः किन्नराः गुह्यकाः साध्याः तुम्बुरश्च, अस्मिन् वेङ्कटाद्रौ विद्यमानेषु वृक्षगुल्मेषु तापसाः भूत्वा तपः कृत्वा श्रीनिवासानुग्रहकांक्षिणः अभवन् तदहं दृष्टवान् इति।

(अनुवर्तते)

# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः - बि.गिरीशकुमारः (शोधच्छात्रः)
चरवाणी - ९९८९६५७५७६



ततः परं द्रुपदस्य अत्यन्तम् अपमानः सञ्जातः। तत्र इदमवगन्तव्यम्, श्रीमन्महाभारते प्रत्येकस्मिन् पात्रविशेषेऽपि प्रत्येकस्मिन् व्यक्तावपि अव्यक्तं अनूह्यं योगबलं तथा तत्तन्महर्षिणां पितृदेवतानां च आशीर्बलं च परिपूर्णतया भवति। अस्य द्रुपदस्य पुनः द्रोणाचार्यस्य विषये क्रोध आगतः। तदा सः द्रोणस्य मारकः मम पुत्रः भवेत्। यः अर्जुनः मां द्रोणस्य पादयोः स्थापितवान् सः मम जामाता भवेत् निश्चयेन इति चिन्तितवान्। द्रोणवधाय पुत्रं प्राप्तुं तपः आचरत्यपि। सा च विस्तृता कथा। तस्य तपसः फलत्वेन द्रौपदी, धृष्टद्युम्नः इति शिशुद्वयं प्राप। सः धृष्टद्युम्नः पुरतः तिष्ठति। तत्र दुर्योधनः "धृष्टद्युम्नः" इत्यनुक्त्वा "द्रुपदपुत्र" इत्युक्त्वा त्वां मारितुं जनितः तव पुरतः अस्ति। इतः परं तव इच्छा इति वदति। कियदसहमानं वचः एतत्? यः कोऽपि युद्धाय आगच्छति चेत् इतः वा ततः गन्तव्यम्? केन्तु "त्वां हन्ति, त्वां हन्ति, त्वां हन्ति" इति वचनं कुतः? असह्यं वचनं खलु!

केश्च "तव शिष्येण" इत्यपि धृष्टद्युम्नं सम्बोध्य तं पश्य गुरो! इति वदति दुर्योधनः द्रोणं प्रति। कुतः? द्रुपदमहाराजः तं पुत्रं धृष्टद्युम्नं द्रोणाचार्याय शिष्यरूपेण अर्पयति। यतः द्रोणं हन्तव्यं चेत् उत्तमधनुर्विद्या, शस्त्रास्त्राणि च आवश्यकानि। तत्सर्वं द्रोणाचार्ये अस्ति। तत्र द्रोणाचार्यः कीदृशः इति पश्यन्तु। स्वहननाय जनितवान् इति ज्ञात्वापि परिपूर्णां विद्यां तस्मै धारयति। तत्र धृष्टद्युम्नः कीदृशः इति एकेन वाक्येन वक्तव्यं चेत्, कौरवाणां पक्षे सेनाधिपतयः विभिन्ना एव स्युः। प्रथमे भीष्मः, तदनु द्रोणाचार्यः, तदनु कर्णः, ततः शल्यः इत्यादिरूपेण बहुजनाः सेनानायकाः आसन्। किन्तु अष्टदशदिनानि यावत् धृष्टद्युम्नः एक एव सेनायाः अधिपतिः पाण्डवपक्षे। तादृशं धृष्टद्युम्नम् आदावेव दूरं स्थापितवान् चेत् अयं सन्दर्भः न आयाति खलु। अतः भवान् बुद्धिहीनः, धृष्टयुम्नः तव निकटे विद्यां अभ्यस्य त्वामेव हन्तुम् आगतवान् इत्यतः सः अतिबुद्धिमान्। एतदृशबुद्धिहीनः भवान् युद्धे स्थित्वा मम प्राणान् हरतीव अस्ति इति "धीमता" इति पदेन निर्वक्ति। इयं वा गुरोः निकटे भाषणपद्धतिः? किन्तु दुर्योधनः उक्तरूपेण व्यङ्ग्यवचनैः पीडयति स्वगुरुम्। 'कस्यामपि दशायां गुरोः निकटे विनयं त्यक्त्वा अन्यथा न भाषणीयम्' इत्यादिविषयान् सर्वान् सुस्पष्टं बोधयितुं परमात्मा अमुं श्लोकं प्रत्येकतया अत्र उक्तवान्। गुरोराश्रयणं अथवा गुरुगमनं सामान्यविषय एव। किन्तु गुरुषु अस्माकं व्यावहारः विनयपूर्वकः उत अविनयपूर्वकः इति विशेषविषयमाश्रित्य अस्माकं भविष्यं निर्धारितं भवति। अतः दुर्योधनस्य भविष्यं किमित्यवगतं खलु! स्वगुरुं द्रोणाचार्यं अवमानितवान् इत्यत एव दुर्योधनः युद्धे पराजयम् अवाप। कदा? युद्धस्य प्रारम्भे एव। अर्थात् सर्वादौ गणपतिपूजासन्दर्भे गणपतिम् अवनतं करोति चेत् किं भवति तदेव जातम्। गुरुः साक्षात् परमात्मा एव। तथाच परमात्मस्वरूपिणं गुरुम् अवमानितवान् इत्यतः यत्किमपि फलं न प्राप। किन्तु अर्जुनः प्राप्तवान्। स च जगद्गुरुं श्रीकृष्णपरमात्मानं आश्रितः, आश्रित्य च विनयेनापृच्छत्, 'किं कर्तव्यमिति नावगच्छामि। कथमपि उपदिश्य मां अस्मात् तारय' इति। तेनैव ज्ञायते अर्जुनदुर्योधनयोः वैलक्षण्यं सुस्पष्टम्। अतः वयमपि कस्मिन्नपि वा सन्दर्भे दुर्योधनवत् न भवेम अर्जुनवदेव भवेम। इदमेव खलु भगवद्गीतायां श्रीकृष्णपरमात्मनः उत्तमं वाक्यम्।

(अनुवर्तते)


न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति।

# कपोतस्य अतिथिसत्कारः

- श्री सुदीपः के.बि.
चरवाणी - ९३९१९२८४४२

एकस्मिन् नगरे कश्चन व्याधः आसीत्। सः अतीव दुष्टः निष्करुणः चासीत्। एकदा सः वनं गतवान्। तत्र जालं प्रसारितवान्। एका कपोता जाले पतिता। तां कपोतां पञ्जरे स्थापयित्वा व्याधः अग्रे गतवान्।

तदा अकस्मात् महती वृष्टिः आरब्धा। महता वेगेन वायुः वाति स्म अपि। भीतः व्याधः आश्रयम् अन्विषन् कस्यचित् महावृक्षस्य अधः आगतवान्। सः उक्तवान् - ''भोः, अत्र यः वासं करोति तम् अहं शरणं गतः अस्मि। सः मां रक्षतु'' इति।

तस्मिन् वृक्षे कश्चन कपोतः वासं करोति स्म। सः एव व्याधेन गृहीतायाः कपोतायाः पतिः आसीत्। कपोतः व्याधस्य पञ्जरे स्थितां पत्नीं दृष्टवान्। तदा सा कपोता पतिम् उक्तवती - ''भोः कान्त! इदानीम् एषः व्याधः शीतार्तः, क्षुधार्तः च सन् अस्माकं गृहम् आगतवान् अस्ति। एतस्य सत्कारः भवता करणीयः। व्याधः मां बद्धवान् इति भवान् मा चिन्तयतु। एतस्य सत्कारं करोतु'' इति।

पत्न्याः वचनं कपोतः अङ्गीकृतवान्। सः अङ्गारकम् आनीय शुष्कैः पर्णैः अग्निं ज्वालितवान्। व्याधम् उक्तवान् - ''भोः व्याध! एतेन अग्निना भवान् स्वस्य शीतबाधां दूरीकरोतु'' इति।

अनन्तरं कपोतः चिन्तितवान् - एषः व्याधः मम अतिथिः अस्ति। एषः इदानीं बुभुक्षितः अस्ति। एतस्मै दातुं कोऽपि आहारः अत्र नास्ति। किं करोमि? इति।

एवं चिन्तयित्वा सः व्याधम् उक्तवान् - ''भोः अतिथिमहाशय! भवान् एकं क्षणं तिष्ठतु। इदानीं भवते आहारं सिद्धं कृत्वा ददामि'' इति। अनन्तरं कपोतः स्वयम् अग्निं प्रविष्टवान्। 'मम मांसं व्याधः खादतु' इति तस्य आशयः आसीत्।

कपोतस्य त्यागं दृष्टवतः व्याधस्य मनसः परिवर्तनं तु समभवत् च। 'एतादृशपक्षिणः अपि धर्माचरणं कुर्वन्ति। अहं तु अन्येषां प्राणीनां प्राणिनाम् अपहरणं कुर्वन् अधर्मेण जीवामि। एतत् अनुचितम्' इति चिन्तयित्वा सः व्याधः अपि अग्निं प्रविश्य प्राणार्पणं कृतवान्।

अनन्तरं ते त्रयः अपि स्वर्गं गतवन्तः।

स्वार्गार्थं बहु कुर्वन्ति स तु धर्मेण सिद्ध्यति।
न तु दुश्चरमार्गेण अतो धर्मं प्रपालयेत्।।







# तिरुप्पावै

तेलुगु मूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.तुलसीप्रसादः
संस्कृतानुवादः - श्री वि.सुधीरः
चरवाणी - ७८४२१२०६४१

1 विष्णुचित्तस्य सुकुमारपुत्रिका एव आण्डाळ्। श्रीरङ्गनाथं पतित्वेन प्राप्तुं, लोककल्याणार्थं च सा स्वसखीभिः सह तिरुप्पावै (श्रीव्रतम्) आचरितुं सङ्कल्पम् अकरोत्। सखीभिः आण्डाळ्...

2 हे सख्यः! सूर्योदयः सञ्जातः। उत्तिष्ठन्तु। व्रतं कुर्मः... आगच्छन्तु।



4 आण्डाळ् व्रतनियमान् वदन्ती अस्ति...

3 आगताः वयम्... कथं कर्तव्यमिति ब्रूहि आण्डाळ्!...



5 एतत् व्रतं लोकसुभिक्षार्थं कल्पते।

6 एवं वा...



7 उषःकाले स्नातव्यम्। घृतं क्षीरं च निषिद्धम्। कज्जलं पुष्पाणि च त्यक्तव्यानि।




9 निषिद्धकार्याणि न कर्तव्यानि। अशुद्धवचनानि न प्रयोक्तव्यानि।

10 तथैव

11 अवशिष्टाः सखीः अपि प्रबोधयन्तु। श्रीकृष्णं कीर्तयन्तु!




13 प्रत्यहम् एकं पाशुरमिति प्रकारेण त्रिंशत्पाशराणि गायन्ती व्रतम् आचरति आण्डाळ्। सा स्वामिने...

14 उचिते काले वृष्ट्यादीन् दत्वा गवादिपशुपक्ष्यादीन् सर्वानपि रक्षय।

15 गोपाल! गोविन्द!



16 नीलादेवि! नप्पिन्न! श्रीकृष्णं प्राबोधयत् वा! सन्तोषः! नेत्रे उन्मील्य पश्यन्नस्ति।




रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्।

17
गोविन्द! तव कृपादृष्ट्या अस्मत्पापानि निवारय। बहूनेवं अनुगृहीतवान् किल!

18
गोविन्द! माधव!

19
सिंहवत् आगच्छ! अस्मान् पालय! त्वमेव शरणम्!

20
दुष्टशिक्षकस्य तव वीरचरितस्तवनम् अस्माकम् अदृष्टफलम्।

21
स्वामिन्! त्वया सह नैवेद्यं भुञ्ज्महे। तद्विहाय अन्याः इच्छाः न सन्ति। भुञ्ज्महे!

22
वयं सदा त्वया सह स्थित्वा तव सेवायां तृप्ताः भवाम स्वामिन्!

23
अस्मदीयबन्धः अविनाभावरूपः। गोविन्द!

24
श्रीव्रतं सुसम्पन्नम्। आण्डाळ् स्वेच्छानुसारं भगवदनुग्रहेण श्रीरङ्गनाथैक्यं प्राप।

अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम...

स्वस्ति

# रसप्रश्नाः

१. सगरमहाराजस्य पुत्राः कति?
अ. ६००० आ. ५०००
इ. ५०००० ई. ६००००

२. पञ्चतन्त्रं कः रचितवान्?
अ. नारायणपण्डितः आ.विष्णुशर्मा
इ. कालिदासः ई. अश्वघोषः

३. गावो विश्वस्य....?
अ. मातरः आ.पितरः
इ. भ्रातारः ई. मित्राणि

४. श्रीमद्भागवतस्य प्रणेता कः?
अ. श्रीकृष्णः आ.ब्रह्मा
इ. वेदव्यासः ई. पराशरः

५. श्रीमद्भगवद्गीतायां कति श्लोकाः?
अ. ७०० आ. ७०१
इ. ७००० ई. ६००

६.श्रीमद्भगवद्गीतायां द्वादशाध्यायस्य नाम किम्?
अ. भक्तियोगः आ. सांख्ययोगः
इ. कर्मयोगः ई. ज्ञानयोगः

७. सात्त्विकपुराणानि कति?
अ. ६ आ. ७
इ. ९ ई. १८

८. श्रीपद्मावतीदेव्याः ब्रह्मोत्सवः कस्मिन् मासे प्रचलति?
अ. आश्वयुज आ.कार्तिक
इ. श्रावण ई. फाल्गुण

समाधानानि - १.ई २. आ ३. अ ४. इ ५. अ ६.अ ७. अ ८. आ

# चित्रलेखनम्

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

# तिरुमलतिरुपतिदेवस्थानानि



११-११-२०२१
दिने आचरितः श्रीस्वामिनः पुष्पयागमहोत्सवः



०४-११-२०२१ आचरितं
तिरुमल श्रीस्वामिनः आलये दीपावल्यास्थानम्।



२०-१०-२०२१ आचरितः
श्रीकपिलेश्वरस्वामिनः अन्नाभिषेकः।



३१-१०-२०२१ तः ०२-११-२०२१ पर्यन्तम् आचरितः
श्रीनिवासमङ्गापुरं, श्रीकल्याणवेङ्कटेश्वरस्वामिनः पवित्रोत्सवः।





१३-११-२०२१ दिनाङ्के तिरुमल श्रीवेङ्कटेश्वरस्वामिनः दर्शनं कृतवन्तः केन्द्रीयगृहसचिवाः मान्याः श्री अमित् षा तथा आन्ध्रप्रदेशस्य मान्यमुख्यमन्त्रिणः श्री वै.एस्. जगन्मोहन् रेड्डि महाशयाः ति.ति.दे. इतरोन्नताधिकारिणश्च।

